श्रीआत्मानन्दग्रन्थरत्नमाला पञ्चषष्टितमं रत्नम् ६५.

श्रीमच्चन्द्रकुलनभोमणिश्रीअभयदेवसूरीश्वरविरचितवृत्तियुतम्

# ॥ श्रीमद्गणधरसुधर्मस्वामिनिर्मितं श्रीउपासकदशाश्रुतम् ॥

---

पूज्यपादमुक्तिविजयगणिमशिष्यपन्न्यासमोतीविजयसदुपदेशात् कुहारीग्रामवास्तव्यश्रेष्ठिवर्यपीताम्बरपत्नीमूलीभगन्या
स्वस्वामिश्रेयोऽर्थदत्तस्य श्रेष्ठिपन्नाजीमोटाजीनामकाऽऽपणसत्कस्य द्रव्यस्य साहाय्येन
श्री "जैन एडवोकेट" मुद्रणालये–घीकांटावाडी–राजनगरे (अमदावाद) शा. गोकुलदासपुत्रचमनलालेन मुद्रितम्
प्रकाशयित्री–भावनगरस्था–श्रीजैन–आत्मानन्दसभा.

वीर सं. २४४६. विक्रम सं. १९७७. आत्म सं. २५. प्रति ४८०.

। अर्हम् ।

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरिपादपद्मेभ्यो नमः ॥

॥ श्रीमद्गणधरसुधर्मस्वामिनिर्मितम् ॥

॥ श्रीमदभयदेवसूरिविरचितवृत्तियुतम् ॥



# ॥ श्रीउपासकदशाङ्गम् ॥





श्रीवर्द्धमानमानम्य व्याख्या काचिद्विधीयते । उपासकदशादीनां प्रायो ग्रन्थान्तरेक्षिता ॥ १ ॥

तत्रोपासकदशाः सप्तममङ्गम् । इह चायमभिधानार्थः । उपासकानां—श्रमणोपासकानां सम्बन्धिनोऽनुष्ठानस्य प्रतिपादिका दशाध्ययनरूपा उपासकदशाः । बहुवचनान्तमेतद्ग्रन्थनाम । आसां च सम्बन्धाभिधेयप्रयोजनानि नामान्वर्थसामर्थ्येनैव प्रतिपादितान्यवगन्तव्यानि । तथा हि—उपासकानुष्ठानमिहाभिधेयं, तदवगमश्च श्रोतॄणामनन्तरप्रयोजनं, शास्त्रकृतां तु तत्प्रतिबोधनमेव तत्, परम्परप्रयोजनं तूभयेषामप्यपवर्गप्राप्तिरिति । सम्बन्धस्तु द्विविधः शास्त्रेष्वभिधीयते । उपायोपेयभावलक्षणो गुरुपर्वक्रमलक्षणश्च । तत्रोपायोपेयभावलक्षणः शास्त्र-

णं कुडुम्बस्स मेढी, पमाणं, आहारे, आलम्बणं, चक्खू, मेढीभूए जाव सवकज्जवड्ढावए यावि होत्था ॥५॥ तस्स णं आणन्दस्स गाहावइस्स सिवनन्दा नामं भारिया होत्था, अहीण जाव सुरूवा । आणन्दस्स गाहावइस्स इट्ठा, आणन्देणं गाहावइणा सद्धिं अणुरत्ता अविरत्ता इट्ठा, सद्द जाव पञ्चविहे माणुस्सए कामभोए पच्चणुभवमाणी विहरइ ॥ ६ ॥ तस्स णं वाणियगामस्स बहिया उत्तरपुरत्थिमे दिसीभाए एत्थ णं कोल्लाए नामं सन्निवेसे होत्था, रिद्धत्थिमिय जाव पासादिए ४ ॥ ७ ॥ तत्थ णं कोल्लाए सन्निवेसे आणन्दस्स गाहावइस्स बहुए मित्तनाइनियगसयणसम्बन्धिपरिजणे परिवसइ, अड्ढे जाव अपरिभूए ॥ ८ ॥ तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जाव समोसरिए, परिसा निग्गया, कूणिए राया जहा तहा जियसत्तू निगच्छइ, निगच्छइत्ता जाव पज्जुवासइ ॥९॥ तए णं से आणन्दे गाहावई इमीसे कहाए लद्धट्ठे समाणे, एवं खलु समणे जाव विहरइ, तं महाफलं, गच्छामि णं जाव पज्जुवासामि एवं सम्पेहेइ, सम्पेहेइत्ता ण्हाए, सुद्धप्पावेसाइं जाव अप्पमहग्घाभरणालङ्कियसरीरे सयाओ गिहाओ पडिनिक्खमइ, पडिनिक्खमइत्ता सकोरेण्टमल्लदामेणं छत्तेणं धरिज्जमाणेणं मणुस्सवग्गुरापरिखित्ते पायविहारचारेणं वाणियगामं नयरं

मज्झं मज्झेणं निगच्छइ, निगच्छइत्ता जेणामेव दूइपलासे चेइए, जेणेव समणे भगवं महावीरे, तेणेव उवागच्छइ, उवागच्छइत्ता तिक्खुत्तो आयाहिणं पयाहिणं करेइ, करेइत्ता वन्दइ नमंसइ जाव पज्जुवासइ॥ १० ॥ तए णं समणे भगवं महावीरे आणन्दस्स गाहावइस्स तीसे य महइमहालियाए परिसाए जाव धम्मकहा । परिसा पडिगया राया य गए ॥ ११ ॥ तए णं से आणन्दे गाहावई समणस्स भगवओ महावीरस्स अन्तिए धम्मं सोच्चा निसम्म हट्ठतुट्ठ जाव एवं वयासी । सद्दहामि णं भन्ते ! निग्गन्थं पावयणं, पत्तियामि णं भन्ते ! निग्गन्थं पावयणं, रोएमि णं भन्ते ! निग्गन्थं पावयणं, एवमेयं भन्ते ! तहमेयं भन्ते ! अवितहमेयं भन्ते ! इच्छियमेयं भन्ते ! पडिच्छियमेयं भन्ते ! इच्छियपडिच्छियमेयं भन्ते ! से जहेयं तुब्भे वयह त्ति कट्टु, जहा णं देवाणुप्पियाणं अन्तिए बहवे राईसरतलवरमाडम्बियकोडुम्बियसेट्ठिसत्थवाहप्पभिइया मुण्डा भवित्ता अगाराओ अणगारियं पव्वइया, नो खलु अहं तहा संचाएमि मुण्डे जाव पव्वइत्तए । अहण्णं देवाणुप्पियाणं अन्तिए पञ्चाणुव्वइयं सत्तसिक्खावइयं दुवालसविहं गिहिधम्मं पडिवज्जिस्सामि । अहासुहं देवाणुप्पिया मा पडिबन्धं करेह ॥ १२ ॥ तए णं से आणन्दे गाहावई समणस्स भग-

गडसएहिं संवाहणिएहिं, अवसेसं सव्वं सगडविहिं पच्चक्खामि ३ ॥ २० ॥ तयाणन्तरं च णं वाहणविहिपरिमाणं करेइ । नन्नत्थ चउहिं वाहणेहिं दिसायत्तिएहिं, चउहिं वाहणेहिं संवाहणिएहिं, अवसेसं सव्वं वाहणविहिं पच्चक्खामि ३ ॥ २१ ॥ तयाणन्तरं च णं उवभोगपरिभोगविहिं पच्चक्खाएमाणे, उल्लणियाविहिपरिमाणं करेइ । नन्नत्थ एगाए गन्धकासाईए, अवसेसं सव्वं उल्लणियाविहिं पच्चक्खामि ३ ॥ २२ ॥

'दिसायत्तिएहिं ति' दिग्यात्रा देशान्तरगमनं प्रयोजनं येषां तानि दिग्यात्रिकानि, तेभ्योऽन्यत्र । 'संवाहणिएहिं ति' संवाहनं क्षेत्रादिभ्यस्तृणकाष्ठधान्यादेर्गृहादावानयनं, तत्प्रयोजनानि सांवाहनिकानि, तेभ्योऽन्यत्र ॥ २० ॥ 'वाहणेहिं ति' यानपात्रेभ्यः ॥ २१ ॥ 'उवभोगपरिभोग त्ति' उपभुज्यते पौनः पुन्येन सेव्यत इत्युपभोगो भवनवसनवनितादिः । परिभुज्यते सकृदासेव्यत इति परिभोग आहारकुसुमविलेपनादिव्यत्ययो व्याख्येय इति । 'उल्लणिय त्ति' स्नानजलार्द्रशरीरस्य जलल्हूपणवस्त्रं ॥ 'गन्धकासाईए त्ति' गन्धप्रधाना कषायेण रक्ता शाटिका गन्धकषायी तस्याः ॥ २२ ॥

तयाणन्तरं च णं दन्तवणविहिपरिमाणं करेइ । नन्नत्थ एगेणं अल्ललट्ठीमहुएणं, अवसेसं दन्तवणविहिं पच्चक्खामि ३ ॥ २३ ॥ तयाणन्तरं च णं फलविहिपरिमाणं करेइ । नन्नत्थ एगेणं खीरामलएणं, अवसेसं

फलविहिं पच्चक्खामि ३ ॥ २४ ॥ तयाणन्तरं च णं अब्भङ्गणविहिपरिमाणं करेइ । नन्नत्थ सयपागसहस्सपागेहिं तेल्लेहिं, अवसेसं अब्भङ्गणविहिं पच्चक्खामि ३ ॥ २५ ॥

'दन्तवण त्ति' दन्तपावनं दन्तमलापकर्षणकम् ॥ 'अल्लुलट्ठीमहुएणं ति' आर्द्रेण यष्टीमधुना मधुररसवनस्पतिविशेषेण ॥ २३ ॥ 'खीरामलएण ति' अबद्धास्थिकं क्षीरमिव मधुरं वा यदामलकं तस्मादन्यत्र ॥ २४ ॥ 'सयपागसहस्सपागेहिं ति' द्रव्यशतस्य क्वाथशतेन सह यत्पच्यते, कार्षापणशतेन वा, तच्छतपाकम् । एवं सहस्रपाकमपि ॥ २५ ॥

तयाणन्तरं च णं उव्वट्टणविहिपरिमाणं करेइ । नन्नत्थ एगेणं सुरहिणा गन्धट्टएणं, अवसेसं उव्वट्टणविहिं पच्चक्खामि ३ ॥ २६ ॥ तयाणन्तरं च णं मज्जणविहिपरिमाणं करेइ । नन्नत्थ अट्ठहिं उट्टिएहिं उदगस्स घडएहिं, अवसेसं मज्जणविहिं पच्चक्खामि ३ ॥ २७ ॥ तयाणन्तरं च णं वत्थविहिपरिमाणं करेइ । नन्नत्थ एगेणं खोमजुयलेणं, अवसेसं वत्थविहिं पच्चक्खामि ३ ॥ २८ ॥

'गन्धट्टएणं ति' गन्धद्रव्याणामुपलकुष्ठादीनाम्, 'अट्टओ त्ति' चूर्णं, गोधूमचूर्णं वा गन्धयुक्तम्, तस्मादन्यत्र ॥ २६ ॥ 'उट्टिएहिं उदगस्स घडएहिं ति' उष्ट्रिका बृहन्मृन्मयभाण्डं, तत्पूरणप्रयोजना ये घटास्त उष्ट्रिका उचितप्रमाणा नातिलघवो महान्तो वेत्यर्थः ॥ इह च सर्वत्रान्यत्रेति शब्दप्रयोगेऽपि प्राकृतत्वात्पञ्चम्यर्थे तृतीया द्रष्टव्येति ॥ २७ ॥ 'खोमजुयलेण ति' कार्पासिकवस्त्रयुगलादन्यत्र ॥२८॥

परिमाणं करेइ । नन्नत्थ एगेणं पालङ्गामाहुरएणं, अवसेसं माहुरयविहिं पच्चक्खामि ३ ॥ ३९ ॥ तयाणन्तरं च णं जेमणविहिपरिमाणं करेइ । नन्नत्थ सेहंवदालियंवेहिं, अवसेसं जेमणविहिं पच्चक्खामि ३ ॥ ४० ॥

'साग त्ति' शाको वस्तुलादिः। 'चूच्चुसाए त्ति' चूच्चुशाकः (भूमुशाकः)। 'तुंवसाए त्ति' तुम्वशाकः, सौवस्तिक शाको मण्डूकिकाशाकश्च लोकप्रसिद्धा एव ॥३८॥ 'माहुरय त्ति' अनम्लरसानि शालनकानि। 'पालङ्ग त्ति' वल्लीफलविशेषः ॥३९॥ 'जेमण त्ति' जेमनानि वटकपूरणादीनि । 'सेहंवदालियंवेहिं त्ति' सेधे सिद्धौ सति यानि अम्लेन तीमनादिना संस्क्रियन्ते तानि सेधाम्लानि । यानि दाल्या मुद्गादिमय्या निष्पादितानि अम्लानि च तानि दालिकाम्लानीति सम्भाव्यन्ते ॥ ४० ॥

तयाणन्तरं च णं पाणियविहिपरिमाणं करेइ । नन्नत्थ एगेणं अन्तलिक्खोदएणं, अवसेसं पाणियविहिं पच्चक्खामि ३ ॥ ४१ ॥ तयाणन्तरं च णं मुहवासविहिपरिमाणं करेइ । नन्नत्थ पञ्चसोगन्धिएणं तम्बोलेणं, अवसेसं मुहवासविहिं पच्चक्खामि ३ ॥ ४२ ॥ तयाणन्तरं च णं चउविहं अणट्ठादण्डं पच्चक्खामि । तं जहा । अवज्झाणायरियं, पमायायरियं, हिंसप्पयाणं, पावकम्मोवएसं ॥ ४३ ॥

'अन्तलिक्खोदयं ति' यज्जलमाकाशात्पतति तदेव गृह्यते, तदन्तरिक्षोदकम् ॥ ४१ ॥ 'पञ्चसोगन्धिएण ति' पञ्चभिः एलालवङ्गकर्पूरककोलजातीफललक्षणैः सुगन्धिभिर्द्रव्यैरभिसंस्कृतं पञ्चसौगन्धिकम् ॥ ४२ ॥ 'अनट्ठादण्डं ति' अनर्थेन धर्मार्थकामव्यतिरेकेण

दण्डोऽनर्थदण्डः । ‘अवज्झाणायरियं ति’ अपध्यानमार्त्तरौद्ररूपं, तेनाचरित आसेवितो योऽनर्थदण्डः स तथा तं । एवं प्रमादाचरितमपि, नवरं प्रमादो विकथारूपोऽस्थगिततैलभाजनधरणादिरूपो वा । ‘हिंस्र हिंसाकारिशस्त्रादि, तत्प्रदानं परेषां समर्पणम् । पापकर्मोपदेशः क्षेत्राणि कृपत इत्यादिरूपः ॥ ४३ ॥

**इह खलु आणन्दा इ समणे भगवं महावीरे आणन्दं समणोवासगं एवं वयासी । एवं खलु आणन्दा, समणोवासएणं अभिगयजीवाजीवेणं जाव अणइक्कमणिज्जेणं सम्मत्तस्स पञ्च अइयारा पेयाला जाणियव्वा, न समायरियव्वा । तं जहा–सङ्का, कङ्खा, विइगिच्छा, परपासण्डपसंसा, परपासण्डसंथवे ॥ ४४ ॥**

‘आणन्दा इ त्ति’ हे आनन्द ! इन्येवं प्रकारेणामन्त्रणवचनेन श्रमणो भगवान्महावीर आनन्दमेवमवादीदिति । एतदेवाह एवं खलु आणन्देत्यादि । ‘अइयारा पेयाला त्ति’ अतिचारा मिथ्यात्वमोहनीयोदयविशेषादात्मनोऽशुभाः परिणामविशेषा ये सम्यक्त्वमतिचरन्ति, ते चानेकप्रकारा गुणिनामनुपबृंहादयः । ततस्तेषां मध्ये पेयालात्ति साराः प्रधानाः स्थूलत्वेन शवयव्यपदेशत्वाच्च ते तथा, तत्र शङ्का–संशयकरणम् । काङ्क्षा–अन्यान्यदर्शनग्रहः । विचिकित्सा–फलं प्रति शङ्का, विद्वज्जुगुप्सा वा साधूनां जात्यादिहीलनेति । परपाषण्डाः–परदर्शनिनस्तेषां प्रशंसा गुणोत्कीर्त्तनम् । परपाषण्डसंस्तवस्तत्परिचयः ॥ ४४ ॥

**तयाणन्तरं च णं थूलगस्स पाणाइवायवेरमणस्स समणोवासएणं पञ्च अइयारा पेयाला जाणियव्वा,**

'तेणाहडे त्ति' स्तेनाहृतं चौरानीतं, तत्समर्घ्यमितिलोभात्काणक्रयेण गृह्णतोऽतिचरति तृतीयव्रतमित्यतिचारहेतुत्वास्तेनाहृतमतिचार उक्तः । अतिचारता चास्य साक्षाच्चौर्याप्रवृत्तेः १ 'तक्करप्पओगे त्ति तस्करप्रयोगश्चौरव्यापारणं, हरत यूयमित्येवमभ्यनुज्ञानमित्यर्थः । अस्याप्यतिचारतानाभोगादिभिरिति २ 'विरुद्धरज्जाइक्कमे त्ति' विरुद्धनृपयो राज्यं विरुद्धराज्यं, तस्यातिक्रमोऽतिलङ्घनं विरुद्धराज्यातिक्रमः । न हि ताभ्यां तत्रातिक्रमोऽनुज्ञातश्चौर्यबुद्धिरपि तस्य तत्र नास्तीत्यतिचारतास्यानाभोगादिना चेति ३ 'कूडतुल्लकूडमाणे त्ति' तुला प्रतीता, मानं कुडवादि, कूटत्वं न्यूनाधिकत्वम् । ताभ्यां न्यूनाभ्यां ददतोऽधिकाभ्यां च गृह्णतोऽतिचरति व्रतमित्यतिचारहेतुत्वादतिचारः कूटतुलाकूटमानमुक्तम् । अतिचारत्वं चास्यानाभोगादेः, अथवा नाहं चौरः क्षात्रखननादेरकरणाद् इत्यभिप्रायेण व्रतसापेक्षत्वात् ४ 'तप्पडिरूवगववहारे त्ति' तेनाधिकृतेन प्रतिरूपकं सदृशं तत्प्रतिरूपकं, तस्य विविधमवहरणं व्यवहारः प्रक्षेपस्तत्प्रतिरूपकव्यवहारः । यद्यत्र घटते व्रीहिघृतादिषु पलञ्जिवसादि तस्य प्रक्षेप इति यावत्, तत्प्रतिरूपकेन वा वसादिना व्यवहरणं तत्प्रतिरूपकव्यवहारः । अतिचारता चास्य पूर्ववत् ५ ॥ ४७ ॥

**तयाणन्तरं च णं सदारसन्तोसीए पञ्च अइयारा जाणियव्वा, न समायरियव्वा । तं जहा—इत्तरियपरिग्गहियागमणे, अपरिग्गहियागमणे, अणङ्गकीडा, परविवाहकरणे, कामभोगतिव्वाभिलासे ४ ॥ ४८ ॥**

'सदारसन्तोसीए त्ति' स्वदारसंतुष्टेरित्यर्थः । 'इत्तरियपरिग्गहियागमणे त्ति' इत्वरकालपरिगृहीता, कालशब्दलोपादित्वरपरिगृहिता, भाटीप्रदानेन कियन्तमपि कालं दिवसमासादिकं स्ववशीकृतेत्यर्थः, तस्यां गमनं मैथुनासेवनमित्वरपरिगृहीतागमनम् । अतिचार-

वेश्याऽन्यसत्कपरिगृहीतभाटिका कुलाङ्गना वा अनाथेति। ता चास्यातिक्रमादिभिः १ 'अपरिगहियागमणे त्ति' अपरिगृहीता नाम वेश्याऽन्यसत्कपरिगृहीतभाटिका कुलाङ्गना वा अनाथेति । अति-
-अस्याप्यतिचारतातिक्रमादिभिरेव २ 'अणङ्गक्रीड त्ति' अनङ्गानि मैथुनकर्मापेक्षया कुचकक्षोरुवदनादीनि, तेषु क्रीडनमनङ्गक्रीडा । परेषामात्मन
चारता चास्य स्वदारेभ्योऽन्यत्र मैथुनपरिहारेणानुरागादालिङ्गनादि विदधतो व्रतमालिन्यादिति ३ 'परविवाहकरणे त्ति' परेषां विवाहादिकरणेन
आत्मीयापत्येभ्यश्च व्यतिरिक्तानां विवाहकरणं परविवाहकरणम् । अयमभिप्रायः—स्वदारसन्तोषिणो हि न युक्तः परेषां विवाहादिकरणेन
मैथुननियोगोऽनर्थको विशिष्टविरतियुक्तत्वादित्येवमनाकलयतः परार्थकरणोद्यततयातिचारोऽयमिति ४ 'कामभोगतिव्वाभिलासे त्ति'
कामौ—शब्दरूपे, भोगा—गन्धरसस्पर्शास्तेषु तीव्राभिलाषो—अत्यन्तं तदध्यवसायित्वं कामभोगतीव्राभिलाषः। अयमभिप्रायः—स्वदारसन्तोषी हि
विशिष्टविरतिमान्, तेन च तावत्येव मैथुनसेवा कर्तुमुचिता यावत्या वेदजनिता बाधोपशाम्यति । यस्तु वाजिकरणादिभिः कामशास्त्रविहि-
तप्रयोगैश्च तामधिकामुत्पाद्य सततं सुरतसुखमिच्छति, स मैथुनविरतिव्रत परमार्थतो मलिनयति । को हि नाम सकर्णकः पामामुत्पाद्याग्नि-
सेवाजनितसुखं वाञ्छेदिति अतिचारत्वं कामभोगतीव्राभिलाषस्येति ५ ॥ ४८ ॥

तयाणन्तरं च णं इच्छापरिमाणस्स समणोवासएणं पञ्च अइयारा जाणियव्वा, न समायरियव्वा । तं जहा । खेत्तवत्थुपमाणाइक्कमे, हिरण्णसुवण्णपमाणाइक्कमे, धणधन्नपमाणाइक्कमे, दुपयचउप्पयपमाणाइक्कमे, कुवियपमाणाइक्कमे ५ ॥ ४९ ॥

'खेत्तवत्थुपमाणाइक्कमे त्ति' क्षेत्रवस्तुनः प्रमाणातिक्रमः—प्रत्याख्यानकालगृहीतमानोल्लङ्घनमित्यर्थः । एतस्य चातिचार-

'भोयणओ कम्मओ य त्ति' भोजनतो—भोजनमाश्रित्य बाह्याभ्यन्तरभोजनीयवस्तून्यपेक्ष्येत्यर्थः। कर्मतः—क्रीयां जीवनवृत्तिं
बाह्याभ्यन्तरभोजनीयवस्तुप्राप्तिनिमित्तभूतामाश्रित्येत्यर्थः॥ 'सचित्ताहारे त्ति' सचेतनाहारः—पृथिव्यप्कायवनस्पतिजीवशरीराणां सचेतना-
नामभ्यवहरणमित्यर्थः। अयं चातिचारः कृतसचित्ताहारप्रत्याख्यानस्य कृततत्परिमाणस्य वानाभोगादिना प्रत्याख्यात सचेतनं
भक्षयतस्तद्वा प्रतीत्यातिक्रमादौ वर्तमानस्य १ 'सचित्तपडिबद्धाहारे त्ति' सचित्ते—वृक्षादौ प्रतिबद्धस्य गुन्दादेरभ्यवहरणम्। अथवा
सचित्तेऽस्थिके प्रतिबद्धं यत्पक्वमचेतनं खर्जूरफलादि तस्य "सास्थिकस्य कटाहमचेतनं भक्षयिष्यामीतरत्परिहरिष्यामि" इति भावनया
मुखे क्षेपणमिति। एतस्य चातिचारत्वं व्रतसापेक्षत्वादिति २ 'अपउलिओसहिभक्खणय त्ति' अपक्वाया—अग्निनाऽसंस्कृताया ओषधेः—शाल्या-
दिकाया, भक्षणता—भोजनमित्यर्थ.। अस्याप्यतिचारतानाभोगादिनैव, ननु सचित्ताहारातिचारेणैवास्य सङ्गृहीतत्वात्किं भेदोपादानेनेति
उच्यते, पूर्वोक्तपृथिव्यादिसचित्तसामान्यापेक्षया, ओषधीनां सदाभ्यवहरणत्वेन प्राधान्यख्यापनार्थं, दृश्यते च सामान्योपादाने सत्यपि
प्राधान्यापेक्षया विशेषोपादानमिति ३ 'दुप्पउलिओसहिभक्खणया' दुःपक्वा—अस्विन्ना ओषधयस्तद्भक्षणता। अतिचारता चास्य-
पक्वबुद्ध्या भक्षयतः ४ 'तुच्छोसहिभक्खणय त्ति' तुच्छा—असारा ओषधयो—अनिष्पन्नमुद्गफलीप्रभृतयः। तद्भक्षणे हि महती विराधना
स्वल्पा च तत्कार्यतृप्तिरिति। विवेकिनाचित्ताशिना ता अचित्तीकृत्य न भक्षणीया भवन्ति। तत्करणेनापि भक्षणेऽतिचारो भवति व्रतसा-
पेक्षत्वात्तस्येति ५ इह च पञ्चातिचारा इत्युपलक्षणमात्रमेवावसेयं, यतो मधुमद्यमांसरात्रिभोजनादिव्रतितामनाभोगातिक्रमादिभिरनेके
ते सम्भवन्तीति॥ 'कम्मओ णामि'त्यादि कर्मतो यदुपभोगव्रतं "खरकर्मादिक कर्म प्रत्याख्यामि" इत्येवंरूपं, तत्र श्रमणोपासकेन पञ्चदश-
कर्मादानानि वर्जनीयानि॥ 'इङ्गालकम्मे त्ति' अङ्गारकरणपूर्वकस्तद्विक्रय एवं यदन्यदपि वह्निसमारम्भपूर्वकं जीवनमिष्टकाभाण्डकादिपाकरूपं

तदङ्गारकर्मेति ग्राह्य समानस्वभावत्वात् । अतिचारता चास्य कृतैतत्प्रत्याख्यानस्यानाभोगादिना अत्रैव वर्तनादिति । एवं सर्वत्र भावना कार्य्या १ नवरं 'वनकर्म' वनस्पतिच्छेदनपूर्वकं तद्विक्रयजीवनम् २ 'शकटकर्म' शकटानां घटनविक्रयवाहनरूपम् ३ 'भाटककर्म' मूल्यार्थं गन्त्र्यादिभिः परकीयभाण्डवहनम् ४ 'स्फोटकर्म', कुद्दालहलादिभिर्भूमिदारणेन जीवनम् ५ 'दन्तवाणिज्य' हस्तिदन्तशङ्ख-पूतिकेशादीनां तत्कर्मकारिभ्यः क्रयेण तद्विक्रयपूर्वकं जीवनम् ६ 'लाक्षावाणिज्य' सज्ञातजीवद्रव्यान्तरविक्रयोपलक्षणम् ७ 'रस-वाणिज्यं' सुरादिविक्रयः ८ 'विषवाणिज्यं' जीवघातप्रयोजनशस्त्रादिविक्रयोपलक्षणम् ९ 'केशवाणिज्यं' केशवतां दासीदासगवोष्ट्रहस्त्या-दिकानां विक्रयरूपम् १० 'यन्त्रपीडनकर्म'—यन्त्रेण तिलेक्षुप्रभृतीनां यत्पीडनरूप कर्म तत् तथा ११ 'निर्लाञ्छनकर्म' वर्धितकरणम् १२ 'दवाग्निदानं'—दवाग्नेः—वनाग्नेर्दानं—वितरणं क्षेत्रादिशोधननिमित्तं दवाग्निदानमिति १३ 'सरोह्रदतडागपरिशोषणता' तत्र सरः—स्वभावनिष्पन्नं, ह्रदो—नद्यादीना निम्नतरः प्रदेशः, तडाग—खननसम्पन्नमुत्तानविस्तीर्णजलस्थानम्, एतेषां शोषण गोधूमादीनां वपनार्थम् १४ 'असती-जनपोषणता' असतीजनस्य—दासीजनस्य पोषणं—तद्भाटिकोपजीवनार्थं यत्तत् तथा । एवमन्यदपि क्रूरकर्मकारिणः प्राणिनः पोषणमसती-जनपोषणमेवेति १५ ॥ ५१ ॥

**तयाणन्तरं च णं अणट्ठदण्डवेरमणस्स समणोवासएणं पञ्च अइयारा जाणियव्वा, न समायरि-यव्वा । तं जहा । कन्दप्पे, कुक्कुइए, मोहरिए, सञ्जुत्ताहिगरणे, उवभोगपरिभोगाइरित्ते । ८ ॥ ५२ ॥**

'कन्दप्पे त्ति' कन्दर्पः—कामस्तद्धेतुर्विशिष्टो वाक्प्रयोगोऽपि कन्दर्प उच्यते । रागोद्रेकात्प्रहासमिश्र मोहोद्दीपकं नर्मेति भावः । अयं चातिचारः प्रमादाचरितलक्षणानर्थदण्डभेदव्रतस्य सहसाकारादिनेति १ 'कुक्कुइए त्ति' कौकुच्यं—अनेकप्रकारा मुखनयनादि-

तादृग् येन परकीयश्रवणविवरमनुपतत्यसाविति ३ 'रूवाणुवाए त्ति' अभिगृहीतदेशाद्बहिः प्रयोजनसद्भावे शब्दमनुच्चारयत एव परेषां स्वसमीपानयनार्थं स्वशरीररूपदर्शनं रूपानुपातः ४ 'बहियापोग्गलपक्खेवे त्ति' अभिगृहीतदेशाद्बहिः प्रयोजनसद्भावे परेषां प्रबोधनाय लेष्ट्वादिपुद्गलप्रक्षेप इति भावना ५ इह चाद्यद्वयस्यानाभोगादिनातिचारत्वं, इतरस्य तु त्रयस्य व्रतसापेक्षत्वादिति ॥ ५४ ॥

**तयाणन्तरं च णं पोसहोववासस्स समणोवासएणं पञ्च अइयारा जाणियव्वा, न समायरियव्वा। तं जहा। अप्पडिलेहियदुप्पडिलेहियसिज्जासंथारे, अप्पमज्जियदुप्पमज्जियसिज्जासंथारे, अप्पडिलेहियदुप्पडिलेहियउच्चारपासवणभूमी, अप्पमज्जियदुप्पमज्जियउच्चारपासवणभूमी, पोसहोववासस्स सम्मं अणणुपालणया ।११॥५५॥**

'पोसहोववासस्स त्ति' इह पोषधशब्दोऽष्टम्यादिपर्वसु रूढः, तत्र पोषधे उपवासः पोषधोपवासः, स चाहारादिविषयभेदाच्चतुर्विध इति, तस्य। 'अप्पडिलेहिय' इत्यादि, अप्रत्युपेक्षितो—जीवरक्षार्थं चक्षुषा न निरीक्षितः। दुःप्रत्युपेक्षित—उद्भ्रान्तचेतोवृत्तितयाऽसम्यग्निरीक्षित.। शय्या—शयनं तदर्थं संस्तारकः—कुशकम्बलफलकादिः शय्यासंस्तारकः, ततः पदत्रयस्य कर्मधारये भवत्यप्रत्युपेक्षितदुःप्रत्युपेक्षितशय्यासंस्तारकः। एतदुपभोगस्यातिचारहेतुत्वादयमतिचार उक्तः १ एवमप्रमार्जितदुःप्रमार्जितशय्यासंस्तारकोऽपि, नवरं प्रमार्जनं वसनाञ्चलादिना २ एवमितरौ द्वौ, नवरमुच्चारः—पुरीषं, प्रस्रवणं—मूत्रं, तयोर्भूमिः—स्थण्डिलम् ३।४ एते चत्वारोऽपि प्रमादतयातिचाराः ॥ 'पोसहोववासस्स सम्मं अणणुपालणयत्ति' कृतपोषधोपवासस्यास्थिरचित्ततयाहारशरीरसत्काराब्रह्मव्यापाराणामभिलषणादननुपालनं पोषधस्येति। अस्य चातिचारत्व भावतो विरतेर्बाधितत्वादिति ५ ॥ ५५ ॥

**तयाणन्तरं च णं अहासंविभागस्स समणोवासएणं पञ्च अइयारा जाणियव्वा, न समायरियव्वा । तं जहा । सचित्तनिक्खेवणया, सचित्तपेहणया, कालाइक्कमे, परववदेसे, मच्छरिया । १२ ॥ ५६ ॥**

' अहासंविभागस्स त्ति ' अहत्ति यथासिद्धस्य—स्वार्थं निर्वर्तितस्येत्यर्थः, अशनादेः समिति—सङ्गतत्वेन पश्चात्कर्मादिदोषपरिहारेण विभजनं—साधवे दानद्वारेण विभागकरणं यथासंविभागः तस्य॥ 'सचित्तनिक्खेवणया' इत्यादि सचित्तेषु—व्रीह्यादिषु निक्षेपणमन्नादेरदानबुद्ध्या मातृस्थानतः सचित्तनिक्षेपणम् १ । एवं सचित्तेन फलादिना स्थगनं सचित्तापिधानम् २ । कालातिक्रमः कालस्य—साधुभोजनकालस्यातिक्रम—उल्लङ्घनं कालातिक्रमः, अयमभिप्रायः—"कालमूनमधिकं वा ज्ञात्वा साधवो न ग्रहिष्यन्ति, ज्ञास्यन्ति च यथायं ददाति " एवं विकल्पतो दानार्थमभ्युत्थानमतिचार इति ३ । तथा परव्यपदेशः " परकीयमेतत्तेन साधुभ्यो न दीयते " इति साधुसमक्षं भणनं, "जानन्तु साधवो यद्यस्यैतद्भक्तादिकं भवेत्तदा कथमस्मभ्यं न दद्याद्" इति साधुसम्मत्ययार्थम् । अथवा "अस्माद्दानान्मम मात्रादेः पुण्यमस्तु " इति भणनमिति ४ । मत्सरिता " अपरेणेदं दत्तं, किमहं तस्मादपि कृपणो हीनो वातोऽहमपि ददामि " इत्येवंरूपो दानप्रवर्तकविकल्पो मत्सरिता ५ । एते चातिचारा एव, न भङ्गा, दानार्थमभ्युत्थानपरिणतेश्च दूषितत्वाद्भङ्गस्वरूपस्य चेहैवमभिधानाद्, यथा—"दाणन्तराय दोसा, न देइ दिज्जन्तयं च वारेइ। दिण्णे वा परितप्पइ, इति किवणत्ता भवे भङ्गो ॥१॥" आवश्यकटीकायां हि न भङ्गातिचारयोर्विशेषोऽस्माभिरवबुद्धः, केवलमिह भङ्गाद्विवेकं कुर्वद्भिरस्माभिरतिचारा व्याख्याताः । सम्प्रदायाश्नवपदादिषु तथा दर्शनात् । "जारिसओ जइभेओ, जह जायइ जह व तत्थ दोसगुणा। जयणा जह अइयारा, भङ्गा तह भावणा नेया ॥१॥" इत्यस्या आवश्यकचूर्ण्यां पूर्वगतगाथाया दर्शनादतिचारशब्दस्य सर्वभङ्गे प्रायोऽप्रसिद्धत्वाच्च । ततो नेदं शङ्कनीयं य एतेऽतिचारा उक्तास्ते भङ्गा एवेति, तथा य एते प्रतिव्रतं पञ्च पञ्चाति-

खलु मे भन्ते कप्पइ अज्जप्पभिइं अन्नउत्थिए वा अन्नउत्थियदेवयाणि वा अन्नउत्थियपरिग्गहियाणि अरिहंतचेइयाइं वा वन्दित्तए वा नमंसित्तए वा, पुव्विं अणालत्तणं आलवित्तए वा संलवित्तए वा, तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणुप्पदाउं वा, नन्नत्थ रायाभिओगेणं गणाभिओगेणं बलाभिओगेणं देवयाभिओगेणं गुरुनिग्गहेणं वित्तिकन्तारेणं। कप्पइ मे समणे निग्गन्थे फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं वत्थकम्बलपडिग्गहपायपुञ्छणेणं पीढफलगसिज्जासंथारएणं ओसहभेसज्जेणं य पडिलाभेमाणस्स विहरित्तए" त्ति कट्टु इमं एयारूवं अभिग्गहं अभिगिण्हइ, २त्ता पसिणाइं पुच्छइ, २त्ता अट्ठाइं आदियइ, २त्ता समणं भगवं महावीरं तिक्खुत्तो वन्दइ, २त्ता समणस्स भगवओ महावीरस्स अन्तियाओ दूइपलासाओ चेइयाओ पडिणिक्खमइ, २ त्ता जेणेव वाणियगामे नयरे, जेणेव सए गिहे, तेणेव उवागच्छइ, २त्ता सिवानन्दं भारियं एवं वयासी। "एवं खलु देवाणुप्पिया! मए समणस्स भगवओ महावीरस्स अन्तिए धम्मे निसन्ते, से वि य धम्मे मे इच्छिए पडिच्छिए अभिरुइए, तं गच्छ णं तुमं देवाणुप्पिया! समणं भगवं महावीरं वन्दाहि जाव पज्जुवासाहि, समणस्स भगवओ महावीरस्स अन्तिए पञ्चाणुव्वइयं सत्तसिक्खावइयं दुवाल-

सविहं गिहिधम्मं पडिवज्जाहि ॥ ५८॥

'नो खलु' इत्यादि, नो खलु मम भदन्त—भगवन्कल्पते—युज्यते। अद्यप्रभृति—इतः सम्यक्त्वप्रतिपत्तिदिनादारभ्य निरतिचारसम्यक्त्वपरिपालनार्थं तद्यतनामाश्रित्य। 'अन्नउत्थिए व त्ति' जैनयूथाद्यदन्ययूथं सङ्घान्तरं तीर्थान्तरमित्यर्थः, तदस्ति येषां तेऽन्ययूथिकाश्चरकादिकुतीर्थिकास्तान्। 'अन्ययूथिकदैवतानि वा' हरिहरादीनि। 'अन्ययूथिकपरिगृहीतानि वा अर्हच्चैत्यानि' अर्हत्प्रतिमालक्षणानि, यथा भौतपरिगृहीतानि वीरभद्रमहाकालादीनि। 'वन्दितुं वा' अभिवादनं कर्तुम्, 'नमस्यितुं वा' प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्तनं कर्तुम्, तद्भक्तानां मिथ्यात्वस्थिरीकरणादिदोषप्रसङ्गादित्यभिप्रायः॥ तथा पूर्वं—प्रथममनालप्तेन सता अन्यतीर्थिकैः तानेव, 'आलपितुं वा' सकृत्सम्भाषितुम्, 'संलपितुं वा' पुनः पुनः संलापं कर्तुम्, यतस्ते तप्ततरायोगोलककल्पाः खल्वासनादिक्रियायां नियुक्ता भवन्ति, तत्प्रत्ययश्च कर्मबन्धः स्यात्। तथालापादेः सकाशात्परिचयेन तस्यैव तत्परिजनस्य वा मिथ्यात्वप्राप्तिरिति। प्रथमालप्तेन त्वसंभ्रमं लोकापवादभयात् "कीदृशस्त्वम्" इत्यादि वाच्यमिति॥ तथा तेभ्योऽन्ययूथिकेभ्यो 'अशनादि दातुं' वा सकृत्, 'अनुप्रदातुं' वा पुनः पुनरित्यर्थः॥ अयं च निषेधो धर्मबुध्यैव, करुणया तु दद्यादपि॥ किं सर्वथा न कल्पत इत्याह। 'नन्नत्थ रायाभिओगेणं ति' न इति—न कल्पत इति योऽयं निषेधः, सोऽन्यत्र राजाभियोगात्, तृतीयाया पञ्चम्यर्थत्वाद्राजाभियोगं वर्जयित्वेत्यर्थः। राजाभियोगस्तु राजपरतन्त्रता। 'गणः' समुदायस्तदभियोगो—वश्यता गणाभियोगस्तस्मात्, बलाभियोगो नाम राजगणव्यतिरिक्तस्य बलवतः पारतन्त्र्यम्, 'देवताभियोगो' देवपरतन्त्रता, गुरुनिग्रहो—मातापितृपारवश्यं, गुरूणां—वा चैत्यसाधूनां निग्रहः—प्रत्यनीककृतोपद्रवो गुरुनिग्रहः, तत्रोपस्थिते तद्रक्षार्थमन्ययूथिकादिभ्यो दददपि नातिक्रामति सम्यक्त्व-

वेसे नायकुलंसि पोसहसालं पडिलेहित्ता, समणस्स भगवओ अन्तियं धम्मपण्णत्तिं उवसम्पज्जित्ताणं विहरित्तए"। एवं सम्पेहेइ, २त्ता कल्लं विउलं तहेव जिमियभुत्तुत्तरागए तं मित्त जाव विउलेणं पुप्फ ५ सक्कारेइ सम्माणेइ, २त्ता तस्सेव मित्त जाव पुरओ जेट्ठपुत्तं सद्दावेइ, २त्ता एवं वयासी। "एवं खलु, पुत्ता, अहं वाणियगामे बहूणं राईसर, जहा चिन्तियं जाव विहरित्तए। तं सेयं खलु मम इदाणिं तुमं सयस्स कुडुम्बस्स आलम्बणं ४ ठवेत्ता जाव विहरित्तए" ॥ ६६ ॥

महावीरस्स अन्तियं ति' अन्तेभवा आन्तिकी महावीरसमीपाभ्युपगतेत्यर्थः। तां 'धम्मपण्णत्तिं ति' धर्मप्रज्ञापनामुपसम्पद्याङ्गीकृत्यानुष्ठानद्वारतः। 'जहा पूरणो त्ति' भगवत्यभिहितो बालतपस्वी। स यथा स्वस्थाने पुत्रादिस्थापनमकरोत्, तथायं कृतवानित्यर्थः। एवं चासौ कृतवान्, विउलं असणपाणखाइमसाइमं उवक्खडावित्ता, मित्तनाइनियगसम्बन्धिपरिजणं आमन्तेत्ता, तं मित्तनाइनियगसम्बन्धिपरिजणं विउलेणं ४ वत्थगन्धमल्लालङ्कारेण य सक्कारेत्ता सम्माणेत्ता, तस्सेव मित्तनाइनियगसम्बन्धिपरिजणस्स पुरओ जेट्ठपुत्तं कुडुम्बे

१ "असणं ४ उवक्खडावेइ, २त्ता मित्तनाइ आमंतित्ता तओ पच्छा ण्हाए जाव अप्पमहग्घाभरणालंकियसरीरे भोयणमंडवंसि सुहासणवरगए तेणं मित्तनाइनियगसयणसंबंधिपरियणेणं सद्धिं तं विउणं असणं पाणं खाइमं साइमं आसाएमाणे विसाएमाणे विहरइ। जिमियभुत्तुत्तराए वि य णं समाणे आयंते चोक्खे परमसुइभूए" इत्यपि प्रत्यन्तरेऽधिकं दृश्यते।

ठवित्त त्ति ॥ 'नायकुलंसि त्ति' स्वजनगृहे ॥ ६६ ॥

तए णं जेट्ठपुत्ते आणन्दस्स समणोवासगस्स तह त्ति एयमट्ठं विणएणं पडिसुणेइ ॥ ६७ ॥ तए णं से आणन्दे समणोवासए तस्सेव मित्त जाव पुरओ जेट्ठपुत्तं कुडुम्बे ठवेइ, २त्ता एवं वयासी । मा णं देवाणुप्पिया! तुब्भे अज्जप्पभिइं केइ मम बहूसु कज्जेसु जाव पुच्छउ वा, पडिपुच्छउ वा, ममं अट्ठाए असणं वा ४ उवक्खडेउ उवकरेउ वा ॥ ६८ ॥

'उवक्खडेउ त्ति' उपस्करोतु—राध्यतु । 'उवकरेउ त्ति' उपकरोतु—सिद्धं सद् द्रव्यान्तरैः कृतोपकारमाहितगुणान्तरं विदधातु ॥६८॥

तए णं से आणन्दे समणोवासए जेट्ठपुत्तं मित्तनाइं आपुच्छइ, २त्ता सयाओ गिहाओ पडिणिक्खमइ, २त्ता वाणियगामं नयरं मज्झं मज्झेणं निग्गच्छइ, २त्ता जेणेव कोल्लाए सन्निवेसे, जेणेव नायकुले, जेणेव पोसहसाला, तेणेव उवागच्छइ, २त्ता पोसहसालं पमज्जइ, २त्ता उच्चारपासवणभूमिं पडिलेहेइ, २त्ता दब्भसंथारयं संथरइ, दब्भसंथारयं दुरुहइ, २त्ता पोसहसालाए पोसहिए दब्भसंथारोवगए समणस्स भगवओ महावीरस्स अन्तियं धम्मपण्णत्तिं उवसम्पज्जित्ता णं विहरइ ॥ ६९ ॥ तएणं से आणंदे समणोवासए उवा-

विहिपुव्वं ॥११॥" 'अट्ठमं ति' अष्टमीं स्वयमारम्भवर्जनप्रतिमां। तद्रूपमिदम्। "वज्जइ सयमारंभं, सावज्जं न कारवेइ पेसेहिं। वित्तिनिमित्तं पुव्वयगुणजुत्तो अट्ठ जा मासा ॥१२॥ 'नवमं ति' नवमीं भृतकप्रेष्यारम्भवर्जनप्रतिमाम्। सा चेयम्। "पेसेहिं आरम्भे, सावज्जं कारवेइ नो गुरुयं। पुव्वोइयगुणजुत्तो, नव मासा जाव विहिणाओ ॥१३॥ 'दसमं ति' दशमीं उद्दिष्टभक्तवर्जनप्रतिमाम्। सा चैवम् ॥ "उद्दिट्ठकडं भत्त, विवज्जए किमुय सेसमारम्भं। सो होइ य खुरमुण्डो, लिहलिं वा धारए कोइ ॥१४॥ दव्व पुट्ठो जाणं, जाणइ नयइ य नो वेइ (?)। पुव्वोदि्‌यगुणजुत्तो, दस मासा कालमाणेणं ॥ १५ ॥ 'एकारसमं ति'। एकादशीं श्रमणभूतप्रतिमाम्। तत्स्वरूपं चैतत्। ""खुरमुण्डो लोएणं रयहरणं ओग्गहं (पडिग्गहं) च घेत्तूणं। समणब्भूओ विहरइ, धम्मं काएण फासन्तो ॥१६॥ एवं उक्कोसेणं, एक्कारस मास जाव विहरेइ। एकाहाइपरेणं, एवं सव्वत्थ पाएणं ॥ १७ ॥ इति ॥ ७१ ॥ ''उरालेण' मित्यादिवर्णको मेघकुमारतपोवर्णक इव व्याख्येयः। यावदनवकाङ्क्षन्विहरतीति ॥ ७२ ॥

तए णं तस्स आणन्दस्स समणोवासगस्स अन्नया कयाइ पुव्वरत्ता जाव धम्मजागरियं जागरमाणस्स अयं अज्झत्थिए ४। एवं खलु अहं इमेणं जाव धमणिसन्तए जाए। तं अत्थि ता मे उट्ठाणे कम्मे बले वीरिए पुरिसक्कारपरक्कमे सद्धाधिइसंवेगे। तं जाव ता मे अत्थि उट्ठाणे सद्धाधिइसंवेगे, जाव य मे धम्मायरिए धम्मोवएसए समणे भगवं महावीरे जिणे सुहत्थी विहरइ, ताव ता मे सेयं कल्लं जाव जलन्ते अपच्छिममारणन्तियसंलेहणाझूसणाझूसियस्स, भत्तपाणपडियाइक्खियस्स, कालं अणवकङ्खमाणस्स, विह-

रित्तए । एवं सम्पेहेइ, २त्ता कल्लं पाउ जाव अपच्छिममारणन्तिय जाव कालं अणवकङ्खमाणे विहरइ ॥ ७३ ॥ तए णं तस्स आणन्दस्स समणोवासगस्स अन्नया कयाइ सुभेणं अज्झवसाणेणं, सुभेणं परिणामेणं, लेसाहिं विसुज्झमाणीहिं तदावरणिज्जाणं कम्माणं खओवसमेणं ओहिनाणे समुप्पन्ने । पुरत्थिमेणं लवणसमुद्दे पञ्चजोयणसयाइं खेत्तं जाणइ पासइ, एवं दक्खिणेणं पच्चत्थिमेण य । उत्तरेणं जाव चुल्लहिमवन्तं वासधरपव्वयं जाणइ पासइ । उड्ढं जाव सोहम्मं कप्पं जाणइ पासइ । अहे जाव इमीसे रयणप्पभाए पुढवीए लोलुयच्चुयं नरयं चउरासीइवाससहस्सट्ठिइयं जाणइ पासइ ॥ ७४ ॥ तेणं कालेणं तेणं समएणं समणे भगवं महावीरे समोसरिए । परिसा निग्गया जाव पडिगया ॥ ७५ ॥ तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अन्तेवासी इन्दभूई नामं अणगारे गोयमगोत्ते णं सत्तुस्सेहे, समचउरंससंठाणसंठिए, वज्जरिसहनारायसङ्घयणे, कणगपुलगनिघसपम्हगोरे, उग्गतवे, दित्ततवे, घोरतवे, महातवे, उराले, घोरगुणे, घोरतवस्सी, घोरबम्भचेरवासी, उच्छूढसरीरे, सङ्खित्तविउलतेउलेसे, छट्ठं छट्ठेणं अणिक्खित्तेणं तवोकम्मेणं संजमेणं तवसा अप्पाणं भावेमाणे विहरइ ॥ ७६ ॥ तए णं से भगवं गोयमे छट्ठक्खम-

त्थि णं, भन्ते, गिहिणो गिहिमज्झावसन्तस्स ओहिनाणं समुप्पज्जइ ?"। "हन्ता, अत्थि"। "जइ णं, भन्ते! गिहिणो जाव समुप्पज्जइ, एवं खलु, भन्ते! मम वि गिहिणो गिहिमज्झावसन्तस्स ओहिनाणे समुप्पन्ने। पुरत्थिमेणं लवणसमुद्दे पञ्चजोयणसयाइं जाव लोलुयच्चुयं नरयं जाणामि पासामि" ॥ ८३ ॥

'गिहमज्झावसन्तस्स त्ति' गृहमध्यावसतः, गेहे वर्तमानस्येत्यर्थः ॥ ८३ ॥

तए णं से भगवं गोयमे आणन्दं समणोवासयं एवं वयासी। "अत्थि णं, आणन्दा, गिहिणो जाव समुप्पज्जइ। नो चेव णं एअमहालए। तं णं तुमं, आणन्दा, एयस्स ठाणस्स आलोएहि जाव तवोकम्मं पडिवज्जाहि" ॥ ८४ ॥ तए णं से आणन्दे भगवं गोयमं एवं वयासी। "अत्थि णं, भन्ते! जिणवयणे सन्ताणं तच्चाणं तहियाणं सब्भूयाणं भावाणं आलोइज्जइ जाव पडिवज्जिज्जइ ?"। "नो तिणट्ठे समट्ठे"। "जइ णं, भन्ते, जिणवयणे सन्ताणं जाव भावाणं नो आलोइज्जइ जाव तवोकम्मं नो पडिवज्जिज्जइ। तं णं, भन्ते, तुब्भे चेव एयस्स ठाणस्स आलोएह जाव पडिवज्जह" ॥ ८५ ॥

'सन्ताणमित्यादय' एकार्थाः शब्दाः ॥ ८५ ॥

तए णं से भगवं गोयमे आणन्देणं समणोवासएणं एवं वुत्ते समाणे, सङ्किए कङ्खिए विइगिच्छासमावन्ने, आणन्दस्स अन्तियाओ पडिणिक्खमइ, २त्ता जेणेव दूइपलासे चेइए, जेणेव समणे भगवं महावीरे, तेणेव उवागच्छइ, २त्ता समणस्स भगवओ महावीरस्स अदूरसामन्ते गमणागमणाए पडिक्कमइ, २त्ता एसणमणेसणे आलोएइ, २त्ता भत्तपाणं पडिदंसेइ, २त्ता समणं भगवं महावीरं वन्दइ नमंसइ, २त्ता एवं वयासी। "एवं खलु भन्ते! अहं तुब्भेहिं अब्भणुण्णाए। तं चेव सव्वं कहेइ जाव। तए णं अहं सङ्किए ३ आणन्दस्स समणोवासगस्स अन्तियाओ पडिणिक्खमामि, २त्ता जेणेव इहं तेणेव हव्वमागए। तं णं भन्ते! किं आणन्देणं समणोवासएणं तस्स ठाणस्स आलोएयव्वं जाव पडिवज्जेयव्वं, उदाहु मए?"॥ गोयमाइ समणे भगवं महावीरे भगवं गोयमं एवं वयासी। "गोयमा, तुमं चेव णं तस्स ठाणस्स आलोएहि जाव पडिवज्जाहि, आणन्दं च समणोवासयं एयमट्ठं खामेहि"॥ ८६॥

'गोयमाइ त्ति' हे गौतम इत्येवमामन्त्र्येति ॥ ८६ ॥

तए णं से भगवं गोयमे समणस्स भगवओ महावीरस्स "तह त्ति" एयमट्ठं विणएणं पडिसुणेइ, २त्ता तस्स ठाणस्स आलोएइ जाव पडिवज्जइ, आणन्दं च समणोवासयं एयमट्ठं खामेइ ॥ ८७ ॥ तए णं

छ्ढउट्टियाकभल्लसंठाणसंठियं निडालं, मुगुंसपुंछं व तस्स भुमगाओ फुग्गफुग्गाओ विगयबीभच्छदंसणाओ, सीसघडिविणिग्गयाइं अच्छीणि विगयबीभच्छदंसणाइं, कण्णा जह सुप्पकत्तरं चेव विगयबीभच्छदंसणिज्जा, उरब्भपुडसन्निभा से नासा, झुसिराजमलचुल्लीसंठाणसंठिया दो वि तस्स नासापुडया, घोडयपुंछं व तस्स मंसूइं कविलकविलाइं विगयबीभच्छदंसणाइं, उट्ठा उट्टस्स चेव लम्बा, फालसरिसा से दन्ता, जिब्भा जह सुप्पकत्तरं चेव विगयबीभच्छदंसणिज्जा, हलकुद्दालसंठिया से हणुया, गल्लकडिलं च तस्स खड्डं फुट्टं कविलं फरुसं महल्लं, मुइङ्गाकारोवमे से खन्धे, पुरवरकवाडोवमे से वच्छे, कोट्ठियासंठाणसंठिया दो वि तस्स बाहा, निसापाहाणसंठाणसंठिया दो वि तस्स अग्गहत्था, निसालोढसंठाणसंठियाओ हत्थेसु अङ्गुलीओ, सिप्पिपुडगसंठिया से नक्खा, ण्हावियपसेवओ व्व उरंसि लम्बन्ति दो वि तस्स थणया, पोट्टं अयकोट्ठओ व वट्टं, पाणकलन्दसरिसा से नाही, सिक्कगसंठाणसंठिए से नेत्ते, किण्णपुडसंठाणसंठिया दो वि तस्स वसणा, जमलकोट्ठिया संठाणसंठिया दो वि तस्स ऊरू, अज्जुणगुट्ठं व तस्स जाणूइं कुडिलकुडिलाइं विगयबीभच्छदंसणाइं, जङ्घाओ करकडीओ लोमेहिं उवचियाओ, अहरीसंठाणसंठिया दो वि तस्स पाया, अहरीलोढसंठाणसंठियाओ पाएसु अङ्गुलीओ, सिप्पिपुडसंठिया से नक्खा ॥ ९४ ॥

तत्र 'इमेयारूवे वण्णावासे पणत्ते त्ति' वर्णकव्यासो वर्णकविस्तरः। 'सीसं ति' शिरः। 'से' तस्य। 'गोकिलिञ्ज त्ति' गवां चरणार्थं यद्वंशदलमयं महद्भाजनं, तद्गोकिलञ्जं डल्लेति यदुच्यते, तस्याधोमुखीकृतस्य यत्संस्थानं तेन संस्थितं तदाकारमित्यर्थः। पुस्तकान्तरे विशेषान्तरमुपलभ्यते। 'विगयकप्पयनिभं ति' विकृतो योऽलञ्जरादीनां घटादीनामित्यर्थः कल्प एव कल्पकः—च्छेदः खण्डं कर्परमिति तात्पर्यं, तन्निभं तत्सदृशमिति। क्वचित्तु 'वियडकोप्परनिभं ति' दृश्यते, तच्चोपदेशगम्यम्। 'सालिभसेल्लसरिसा' व्रीहिकणिशशूकसमाः 'से' तस्य 'केसा' बालाः, एतदेव व्यनक्ति, 'कविलतेएणं दिप्पमाणा' पिङ्गलदीप्त्या रोचमानाः। 'उट्टियाकभल्लसंठाणसंठियं' उष्ट्रिका—मृण्मयो महाभाजनविशेषस्तस्याः कभल्लं—कपालं तस्य यत्संस्थानं तत्संस्थितम्, 'निडालं ति' ललाटम्। पाठान्तरे 'महल्लउट्टियाकभल्लसरिसोवमे' महोष्ट्रिकाकपालसदृशमित्येवमुल्लेखेनोपमा,—उपमानवाक्यं यत्र तत्तथा 'मुगुंसपुच्छं व' भुजपरिसर्पविशेषो मुगु, सा च खाडहिल्ल त्ति सम्भाव्यते, तत्पुच्छवत्, तस्येति पिशाचरूपस्य 'भुमगाओ त्ति' भ्रुवौ, प्रस्तुतोपमार्थमेव व्यनक्ति, 'फुग्गफुग्गाओ त्ति' परस्परासम्बद्धरोमिके विकीर्णविकीर्णरोमिके इत्यर्थः। पुस्तकान्तरे तु 'जडिलजडिलाओ त्ति' प्रतीतम्। 'विगयबीभच्छदंसणाओ त्ति' विकृतं—बीभत्सं च दर्शन—रूप ययोस्ते तथा। 'सीसघडिविणिग्गयाणि' शीर्षमेव घटी तदाकारत्वात् शीर्षघटी, तस्या विनिर्गते इव विनिर्गते शिरोघटीमतिक्रम्य व्यवस्थितत्वात्, अक्षिणी—लोचने, विकृतबीभत्सदर्शने प्रतीतम्। कर्णौ—श्रवणौ यथा सूर्पकर्त्तरमेव—सूर्पखण्डमेव नान्यथाकारौ टप्पराकारावित्यर्थः। विकृतेत्यादि तथैव। 'उरब्भपुडसन्निभा' उरभ्र—उरणस्तस्य पुटं—नासापुटं, तत्सन्निभा—तत्सदृशी नासा—नासिका। पाठान्तरे 'हुरब्भपुडसंठाणसंठिया,' तत्र हुरब्भा—वाद्यविशेषस्तस्याः पुटं—पुष्करं तत्संस्थानसंस्थिता अतिचिपिटत्वेन समत्वादिति। 'झुसिर त्ति' महारन्ध्रा, 'जमलचुल्लीसंठाणसंठिया' यमलयोः—समस्थितद्वयरूपयोः चुल्ल्योर्यत्संस्थानं तत्संस्थिते द्वे अपि तस्य नासापुटे—नासिकाविवरे॥

न्दुरमालापरिणद्धसुकयचिंधे, नउलकयकण्णपूरे, सप्पकयवेगच्छे, अप्फोडन्ते, अभिगज्जन्ते, भीममुक्कट्टहासे, नाणाविहपञ्चवण्णेहिं लोमेहिं उवचिए एगं महं नीलुप्पलगवलगुलियअयसिकुसुमप्पगासं असिं खुरधारं गहायजेणेव पोसहसाला, जेणेव कामदेवे समणोवासए, तेणेव उवागच्छइ, २त्ता आसुरत्ते रुट्ठे कुविए चण्डिक्किए मिसिमिसीयमाणे कामदेवं समणोवासयं एवं वयासी। "हं भो कामदेवा समणोवासया, अप्पत्थियपत्थिया, दुरन्तपन्तलक्खणा, हीणपुणचाउद्दसिया, सिरिहिरिधिइकित्तिपरिवज्जिया, धम्मकामया पुण्णकामया सग्गकामया मोक्खकामया, धम्मकङ्खिया ४, धम्मपिवासिया ४, नो खलु कप्पइ तव देवाणुप्पिया! जं सीलाइं वयाइं वेरमणाइं पच्चक्खाणाइं पोसहोववासाइं चालित्तए वा खोभित्तए वा खण्डित्तए वा भञ्जित्तए वा उज्झित्तए वा परिच्चइत्तए वा, तं जइ णं तुमं अज्ज सीलाइं जाव पोसहोववासाइं न छंड्डसि न भञ्जेसि, तो ते अहं अज्ज इमेणं नीलुप्पल जाव असिणा खण्डाखण्डिं करेमि, जहा णं तुम देवाणुप्पिया! अट्टदुहट्टवसट्टे अकाले चेव जीवियाओ ववरोविज्जसि" ॥ ९५ ॥

केशाग्रान्नखाग्रं यावद्वर्णितं पिशाचरूपमधुना सामान्येन तद्वर्णनायाह-'लडहमडहजाणुए त्ति' इहप्रस्तावे लडहशब्देन गन्त्याः पश्चाद्भागवर्ति तदुत्तराङ्गरक्षणार्थं यत्काष्ठं तदुच्यते, तच्च गन्त्यां श्लथबन्धनं भवति, एवं च श्लथसन्धिबन्धनत्वाल्लडह इव लडहे मडहे च

स्थूलत्वाल्पदीर्घत्वाभ्यां जानुनी यस्य तत्तथा । विकृते–विकारवत्यौ, भग्ने विसस्थुलतया, भुग्ने वक्रे भ्रुवौ यस्य पिशाचरूपस्य तत्तथा । इहान्यदपि विशेषणचतुष्टयं वाचनान्तरेऽधीयते । 'मसिमूसगमहिसकालए' मषीमूषिकामहिषवत्कालकम् । 'भरियमेहवण्णे' जलभृतमेघवर्ण कालमेवेत्यर्थः । 'लम्बोट्ठे निग्गयदन्ते' प्रतीत्रमेव तथा । अवदारितं–विवृतीकृतं वदनलक्षणं विवरं येन तत्तथा । तथा निर्ल्लालिता–निष्कासिता अग्रजीह्वा–जिह्वाया अग्रभागो येन तत्तथा । ततः कर्मधारयः । तथा शरटैः कृकलासैः कृता मालिका–स्रक् मुण्डे वक्षसि वा येन तत्तथा । तथा उन्दुरमालया–मूषिकस्रजा परिणद्धं–परिगतं सुकृतं–सुष्ठु रचितं चिह्नं स्वकीयलाञ्छनं येन तत्तथा । तथा नकुलाभ्यां–बभ्रुभ्यां कृते कर्णपूरे–आभरणविशेषौ येन तत्तथा । तथा सर्पाभ्यां कृतं वैकक्षं–उत्तरासङ्गो येन तत्तथा । पाठान्तरेण 'मूसगकयभुंभुंलए विच्छुयकयच्छे सप्पकयजण्णोवइए' तत्र 'भुंभुंभलए त्ति' शेखरः 'विच्छुय त्ति' वृश्चिकाः, यज्ञोपवीतं–ब्राह्मणकण्ठसूत्रम् । तथा 'अभिन्नमुहनयणनक्खवरवग्धचित्तकत्तिनियंसणे' अभिन्नाः–अविशीर्णा मुखनयननखा यस्यां सा तथा सा चासौ वरव्याघ्रस्य चित्रा–कर्बुरा कृत्तिश्च–चर्मेति कर्मधारयः, सा निवसनं–परिधानं यस्य तत्तथा । 'सरसरुहिरमंसावलित्तगत्ते' सरसाभ्यां रुधिरमांसाभ्यामवलिप्तं गात्रं यस्य तत्तथा । आस्फोटयन्–करास्फोटं कुर्वन्, अभिगर्जन्–घनध्वनिं मुञ्चन्, भीमो मुक्तः–कृतोऽट्टहासो–हासविशेषो येन तत्तथा । नानाविधपञ्चवर्णैरोमभिरुपचित्तमेकं महन्नीलोत्पलगवलगुलिकातसीकुसुमप्रकाशमसिं क्षुरधारं गृहीत्वा, यत्र पौषधशाला यत्र कामदेवः श्रमणोपासकस्तत्रोपागच्छतिस्मेति। इह गवलं–महिषशृङ्गं, गुलिका–नीली, अतसी–धान्यविशेष', असिः–खड्गः क्षुरस्येव धारा यस्यातिच्छेदकत्वादसौ क्षुरधारः।'आसुरत्ते रुट्ठे कुविए चण्डिक्किए मिसिमिसीयमाणे त्ति' एकार्थाः शब्दाः कोपातिशयप्रदर्शनार्थाः। 'अप्पत्थियपत्थिया' अप्रार्थितप्रार्थिक। दुरन्तानि–दुष्टपर्यवसानानि प्रान्तानि–असुन्दराणि लक्षणानि यस्य स तथा। 'हीणपुण्णचाउद्दसिय त्ति' हीना–असम्पूर्णा पुण्या

उदग्गं पिट्ठओ वराहं अयाकुच्छिं अलम्बकुच्छिं पलम्बलम्बोदराधरकरं अब्भुग्गयमउलमल्लियाविमलधवल-दन्तं कञ्चणकोसीपविट्ठदन्तं आणामियचावललियसंवल्लियग्गसोण्डं कुम्मपडिपुण्णचलणं वीसइनक्खं अल्लीणपमाणजुत्तपुच्छं ॥ १०१ ॥

चालयितुं—अन्यथा कर्तुम् । चलनं च द्विधा संशयद्वारेण विपर्ययद्वारेण च । तत्र क्षोभयितुमिति संशयतो, विपरिणमयितुमिति च विपर्ययतः । श्रान्तादयः समानार्थाः । 'सत्तङ्गपइट्ठियं ति' सप्ताङ्गानि—चत्वारः पादाः करः पुच्छं शिश्नं चेति, एतानि प्रतिष्ठितानि—भूमौ लग्नानि यस्य तत्तथा । 'सम्मं' मांसोपचयात्संस्थितम् । गजलक्षणोपेतसकलाङ्गोपाङ्गत्वात्सुजातमिव सुजातं पूर्णदिनजातम् । पुरतोऽग्रत उदग्रं—उच्चं समुच्छ्रितशिर इत्यर्थः । पृष्ठतः—पृष्ठदेशे वराहः—शूकरः स इव वराहः, प्राकृतत्वान्नपुंसकलिङ्गता । अजाया इव कुक्षिर्यस्य तदजाकुक्षि । अवलम्बकुक्षि बलवत्त्वेन, प्रलम्बो—दीर्घो लम्बोदरस्येव गणपतेरिव अधरः—ओष्ठः करश्च—हस्तो यस्य तत्प्रलम्बलम्बोदराधरकरम् । अभ्युद्गतमुकुला आयतकुड्मला या मल्लिका—विचकिलस्तद्वत् विमलधवलौ दन्तौ, यस्य अथवा प्राकृतत्वान्मल्लिकामुकुल वदभ्युद्गतौ—उन्नतौ विमलधवलौ च दन्तौ यस्य तदभ्युद्गतमुकुलमल्लिकाविमलधवलदन्तम् । काञ्चनकोशीप्रविष्टदन्तं, कोशी—प्रतिमा । आनामितं—ईषन्नामितं यच्चापं—धनुस्तद्वद्या ललिता च—विलासवती, संवेल्लिता च वेल्लन्ती सङ्कोचिता वा, अग्रशुण्डा शुण्डाग्रं यस्य तत्तथा । कूर्मवत्—कूर्माकाराः प्रतिपूर्णाश्चरणा यस्य तत्तथा । विंशतिनखम् । आलीनप्रमाणयुक्तपुच्छमिति कण्ठ्यम् ॥ १०१ ॥

मत्तं मेहमिव गुलगुलेन्तं मणपवणजइणवेगं दिव्वं हत्थिरूवं विउव्वइ, २त्ता जेणेव पोसहसाला जेणेव कामदेवे समणोवासए तेणेव उवागच्छइ, २त्ता कामदेवं समणोवासयं एवं वयासी । " हं भो कामदेवा समणोवासया, तहेव भणइ जाव न भञ्जेसि, तो ते अज्ज अहं सोण्डाए गिण्हामि, २ त्ता पोसहसालाओ नीणेमि, २ त्ता उड्ढं वेहासं उव्विहामि, २ त्ता तिक्खेहिं दन्तमुसलेहिं पडिच्छामि, २ त्ता अहे धरणितलंसि तिक्खुत्तो पाएसु लोलेमि, जहा णं तुमं अट्टदुहट्टवसट्टे अकाले चेव जीवियाओ ववरोविज्जसि ॥ १०२ ॥ तए णं से कामदेवे समणोवासए तेणं देवेणं हत्थिरूवेणं एवं वुत्ते समाणे, अभीए जाव विहरइ ॥ १०३ ॥ तए णं से देवे हत्थिरूवे कामदेवं समणोवासयं अभीयं जाव विहरमाणं पासइ, २ त्ता दोच्चं पि तच्चं पि कामदेवं समणोवासयं एवं वयासी । " हं भो कामदेवा " तहेव जाव सो वि विहरइ ॥ १०४ ॥ तए णं से देवे हत्थिरूवे कामदेवं समणोवासयं अभीयं जाव विहरमाणं पासइ, २ त्ता आसुरत्ते ४, कामदेवं समणोवासयं सोण्डाए गिण्हेइ, २ त्ता उड्ढं वेहासं उव्विहइ, २ त्ता तिक्खेहिं दन्तमुसलेहिं पडिच्छइ, २ त्ता अहे धरणितलंसि तिक्खुत्तो पाएसु लोलेइ ॥ १०५ ॥ तए णं से कामदेवे समणो-

पच्छिमभाएणं तिक्खुत्तो गीवं वेढेइ, २ त्ता तिक्खाहिं विसपरिगयाहिं दाढाहिं उरंसि चेव निक्कुट्टेइ ॥ १०९ ॥ तए णं से कामदेवे समणोवासए तं उज्जलं जाव अहियासेइ ॥ ११० ॥

'उज्जलं ति' उज्ज्वलां—विपक्षलेशेनाप्यकलङ्किताम, विपुलां—शरीरव्यापकत्वात्, कर्कशां—कर्कशद्रव्यमिवानिष्टाम, प्रगाढां—प्रकर्षवतीम्, चण्डां—रौद्राम्, दुःखां—दुःखरूपां, न सुखामित्यर्थः । किमुक्तं भवति, 'दुरहियासं ति' दुरधिसह्यामिति ॥ ११० ॥

तए णं से देवे सप्परूवे कामदेवं समणोवासयं अभीयं जाव पासइ; २ त्ता जाहे नो संचाएइ कामदेवं समणोवासयं निग्गन्थाओ पावयणाओ चालित्तए वा खोभित्तए वा विपरिणामित्तए वा, ताहे सन्ते ३ सणियं सणियं पच्चोसक्कइ, २ त्ता पोसहसालाओ पडिणिक्खमइ, २ त्ता दिव्वं सप्परूवं विप्पजहइ, २ त्ता एगं महं दिव्वं देवरूवं विउव्वइ हारविराइयवच्छं जाव दसदिसाओ उज्जोवेमाणं पासाईयं दरिसणिज्जं अभिरूवं पडिरूवं ॥ १११ ॥

'हारविराइयवच्छं' इत्यादौ यावत्करणादिदं दृश्यम । 'कडगतुडियथम्भियभुयं अङ्गदकुण्डलमट्ठगण्डतलकण्णपीढधारिं विचित्तहत्थाभरणं विचित्तमालामउलिं कल्लाणगपवरवत्थपरिहियं कल्लाणगपवरमल्लाणुलेवणधरं भासुरबोन्दिं पलम्बवणमालाधरं दिव्वेणं वण्णेणं दिव्वेणं गन्धेणं दिव्वेणं फासेणं दिव्वेणं सङ्घयणेणं दिव्वेणं संठाणेणं दिव्वाए इड्ढीए दिव्वाए जुईए दिव्वाए पभाए दिव्वाए छायाए दिव्वाए

अच्चीए दिव्वेणं तेएणं दिव्वाए लेसाए त्ति' कण्ठ्यम् । नवरं कटकानि—कङ्कणविशेषास्तुटितानि—बाहुरक्षकास्ताभिरतिबहुत्वात्स्तम्भितौ—स्तब्धीकृतौ भुजौ यस्य तत्तथा । अङ्गदे च—केयूरे, कुण्डले च—प्रतीते, मृष्टगण्डतले—घृष्टगण्डे ये कर्णपीठाभिधाने—कर्णाभरणे ते च धारयति यत्तत्तथा, तथा विचित्रमालाप्रधानो मौलिर्मुकुटं मस्तकं वा यस्य तत्तथा, कल्याणकं—अनुपहतं प्रवरं वस्त्रं परिहितं येन तत्तथा । कल्याणकानि प्रवराणि माल्यानि—कुसुमानि अनुलेपनानि च धारयति यत्तत्तथा । भास्वरबोन्दीकं—दीप्तशरीरम् । प्रलम्बा या वनमाला—आभरणविशेषस्तां धारयति यत्तत्तथा । दिव्येन वर्णेन युक्तमिति गम्यते, एवं सर्वत्र, नवरं ऋद्ध्या—विमानवस्त्रभूषणादिकया, युक्त्या—इष्टपरिवारादियोगेन, प्रभया—प्रभावेन, छायया—प्रतिबिम्बेन, अर्चिषा—दीप्तिज्वालया, तेजसा—कान्त्या, लेश्यया—आत्मपरिणामेन, उद्योतयन्—प्रकाशयन्, शोभयन्निति, प्रासादीयं—चित्ताह्लादकं, दर्शनीयं—यत्पश्यच्चक्षुर्न श्राम्यति, अभिरूपं—मनोज्ञं, प्रतिरूपं—द्रष्टारं २ प्रतिरूपं यस्य ॥१११॥

दिव्वं देवरूवं विउव्वइ, २त्ता कामदेवस्स समणोवासयस्स पोसहसालं अणुप्पविसइ, २त्ता अन्तलिक्खपडिवन्ने सखिङ्खिणियाइं पञ्चवण्णाइं वत्थाइं पवरपरिहिए कामदेवं समणोवासयं एवं वयासी । "हं भो कामदेवा समणोवासया धन्ने सि णं तुमं देवाणुप्पिया, सम्पुण्णे कयत्थे कयलक्खणे, सुलद्धे णं तव देवाणुप्पिया माणुस्सए जम्मजीवियफले, जस्स णं तव निग्गन्थे पावयणे इमेयारूवे पडिवत्ती लद्धा पत्ता अभिसमन्नागया । एवं खलु देवाणुप्पिया, सक्के देविन्दे देवराया जाव सक्कंसि सीहासणंसि चउरासीईए सामा-

